

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

मार्च् २०२०, रू ५/-

२०२० मार्च्
५ तः ९ पर्यन्तम्
तिरुमल
श्री वेङ्कटेश्वरस्वामिनः
प्लवोत्सवः

तिरुमलतिरुपतिदेवस्थानम्

# तिरुपति

## श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः

२३.०३.२०२० तः ३१.०३.२०२० पर्यन्तम्







२३-०३-२०२० इन्दुवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

२४-०३-२०२० भौम्यवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

२५-०३-२०२० सौम्यवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्डपम्

२६-०३-२०२० बृहस्पतिवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

२७-०३-२०२० भृगुवासरः
प्रातः
आन्दोलिकायां मोहिन्यवतारः
रात्रौ - गरुडवाहनम्

२८-०३-२०२० स्थिरवासरः
प्रातः हनुमद्वाहनम्
सायं : वसन्तोत्सवः
रात्रौ - गजवाहनम्

२९-०३-२०२० भानुवासरः
प्रातः सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

३०-०३-२०२० इन्दुवासरः
प्रातः रथोत्सवः
रात्रौ - अश्ववाहनम्

३१-०३-२०२० भौम्यवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्



## गीतामृतम्

भवान्भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च।।

भवान् भीष्मः कर्णः समितिञ्जयश्च कृपः
अश्वत्थामा विकर्णः सौमदत्तिः च (सन्ति)।

(भगवद्गीता १/८)

## जगन्नाथाष्टकम्



कृपापारावारःसजलजलद श्रेणिरुचिरो
रमावाणीरामः स्फुरदमलपद्मेक्षणमुखः।
सुरेन्द्रैराराध्यः श्रुतिगणशिखागीतचरितो
जगन्नाथः स्वामी नयनपथगामी भवतु मे।।

(श्री जगद्गुरुशङ्कराचार्यकृत जगन्नाथाष्टकस्य देव व्रती टीका)

दयासमुद्रः श्यामसुन्दरः लक्ष्मीप्रदः
लक्ष्मीसरस्वतीहर्षजनकः
कमलायतलोचनः ब्रह्मादिभिरपि संसेव्यः
उपनिषद्वेद्यः प्रभुः जगन्नाथः मे नयनयोः
समक्षं प्रकटितो भवतु।

सम्पादकीयम्

# सौमनस्यमेव शुभाकांक्षा!

भारतीयाः सर्वत्र भगवद्भावनया भगवन्तं एवं द्रष्टुंविज्ञानधनाः। इयं प्रकृतिः सम्पूर्णा स्त्रीमयी पुरुषस्तु पुरुषोत्तम रूप भगवानेव। रूपं विनापि प्रचोदनशक्त्या प्रकृतिं चैतन्ययित्वा, मानव जीवित लक्ष्य साधनस्य विजयः भवति कालः। तदर्थमेव भगवद्गीतायां गीताचार्यः 'कथयति सम्पूर्ण कालस्य प्रचोदकः अहमेव' इति। सम्पूर्ण प्रपञ्चे नानादेशेषु तेषां कालगणन आश्रित्य येन केनापि वा नाम्ना संवत्सरस्य प्रथमपर्व आचरन्ति इत्ययं विषयः लोचन गोचरः। वयं तु संवत्सरस्य प्रथमदिनं 'युगादि' नाम्ना क्रियमाणा स्मः।

चन्द्रमानरीत्या वसन्तऋतौ चैत्रशुद्धपाड्यमी पर्वदिने युगादि पर्वमाचरीय आवर्ष यावत् उत्साहेन सत्फलान्यवाप्य प्रशान्त जीवनयापनाय कालात्मकं भगवन्तं प्रार्थयामः। एतत् संवत्सरात्मक कालप्रमाण प्रयाणे प्रथमपादक्षेपणाय शुभोदय पर्वदिनं।

अस्मिन् मासे एव 'अन्तर्जातीय महिला दिनोत्सवमायाति' याति इदं विश्वंसम्पूर्णं शक्ति मयं। तां शक्तिमेव स्त्रीमूर्ति इव विशेषतया मातृमूर्ति भावनया वयं अर्चयामः! इदं एव अस्माकं वैशिष्ट्यम्।

''यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः'' अर्थात् यत्र स्त्री जनाः गौरवमवाप्य तिष्टन्ति तत्रैव देवाः अपि अनुगृहणन्ति। इदं विश्वंसम्पूर्णं स्त्रीमूर्त्याः एव अविर्भभूव। स्त्री एव प्रथमा मातृमूर्तिः तदुपरि याः विद्यमानाः भान्धव्य द्रुष्ट्या भिन्ननामभिः व्यवह्रीयताः। किन्तु मणौ सूत्र इव सर्वनामसु अन्तर्गत शक्तिः मातृरूपमेव तदर्थमेव आगम्ये इत्थं ब्रवीति ''मातृदेवो भव'' इति अर्थात् 'मातरं दैवत इव पूजयः' एतद् वाक्यं प्रपञ्च देशानां सर्वकालीन महामन्त्रः। नव शिशेः प्रथम गुरु भवति माता। माता शिशोः जन्म दत्वा लोकं दार्शयति। पिता तु तस्य शिशोः लोक विषये कथयति! एवं मातापितरौ शिशुपोषण विषये कटिबद्धारौ एव। प्राचीनकाले मातृव्यवस्था आसीत्। कुटुम्बनिर्वहणे माता एव महाराज्ञी! भौतिक आध्यात्मिक गुरुः माता एव! तादृश्यै मात्र बाधां यदि दद्मः सम्पूर्ण जातेः जीवनं अस्तव्यस्तं भवति। अमुं विषये साम्प्रतिक युवानः मुख्यतया मनसि धर्तव्यावसरः विद्यते। स्त्री गौरवं नाम देवतायाः गौरवमेव।

अयं 'शार्वरी' नाम संवत्सरः स्वहिंसा प्रकृतिं विहाय अस्मान् कुमार्गात् सुमार्गं प्रति निर्गमय्य अस्मभ्यं श्रीवेङ्कटेश्वरस्वामिनः द्वारा शुभफलान् प्रददय आनन्दं प्रदास्यति इति सविश्वासं साम्प्रतं सानन्देन सबादं इयं 'सप्तगिरि' पत्रिका शुभकामनाः वितनोति।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-१२

# सप्तगिरिः

## मार्च् -२०२०

श्रीविकारिनामसंवत्सरस्य फाल्गुणशुक्ल षष्टि तः श्री शार्वरि नाम संवत्सरस्य चैत्रशुक्ल सप्तमि पर्यन्तम् - १९४१





**मुखचित्रम्** – श्रीस्वामिनः प्लवोत्सवः, तिरुमल
**अन्तिमरक्षापुटः** – श्रीसीतालक्ष्मण समेत श्रीकोदण्डरामस्वामी, तिरुपति

गौरवसम्पादकः-
श्री अनिलूकुमार् सिंघाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः – प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः – डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः – श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते संपर्क कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# युगादि

- डा. एन्.उमादेवी

चरवाणी - ९९५१७३४४९४

प्रतिसंवत्सरं चैत्रमास शुक्लपक्ष प्रतिपत्तिर्थो युगादि महोत्सवः प्रचलति। एष महोत्सवः भविष्यपुराणोत्तरभागे, ब्रह्मपुराणे, धर्मसिन्धौ, निर्णयसिन्धौ अभिवर्णितः भवति। तस्मिन् दिने अस्य महोत्सवस्य आचरणेन पञ्चाङ्गश्रवणेन च जनेषु भक्ति भावः परिकल्प्यते।

**युगादि वैशिष्ट्यम् : -** युगादिमहोत्सवः कर्णाटक, आन्ध्रदेशीयानां प्रसिद्धः उत्सवः वर्तते। अयमेव संवत्सरादिरिति व्यवह्रीयते। प्रतिसंवत्सरं चैत्रशुद्धप्रतिपत् दिने अयमुत्सवः प्रचलति। एष एव सर्वेषु उत्सवेषु आद्यः इति ज्ञायते। अस्मिन् दिने सार्ववर्णिकाः जनाः अभ्यंगन स्नानं कृत्वा नूतन वस्त्राभरणानि धरन्ति। अनन्तरं यजमानः पुत्र मित्र कलत्र समेतः पूजामन्दिरे देवता प्रतिमानां अथवा चित्रपटानां समीपे उपविश्य नूतन पञ्चाङ्गं हरिद्रा कुंकुमादिभिः अलंकृत्य पीठे निक्षिप्य पत्र पुष्प फलाक्षतैः इष्टदेवता पूजनं कुर्यात्। ततः युगादि चोष्यं (लेह्यं) सज्जीकृत्य भगवन्निवेदनं कृत्वा सर्वे प्रसादरूपेण स्वीकुर्युः।

यद्वर्षादौ निम्बसुमं शर्कराम्ल घृतैर्युतम्।
भक्षितं पूर्वयामेस्यात्तद्वर्षं सौख्यदायकम्।।



उपर्युक्त श्लोकानुसारं तत्र युगादि चोष्ये निंबकुसुमं, गुडं, तिन्त्रिणीफलं, घृतं च उपयुज्यन्ते, परन्तु प्रान्तीय आचार मनुसृत्य चूतफलं, नारिकेल शकलानि, कृष्णमरीचिका अपि पदार्थाः सम्मिलिताः भवन्ति। अनन्तरं भक्ष्यभोज्य चोष्य लेह्य सम्मिलितं अन्नं सज्जीकृत्य भगवन्निवेदनं कृत्वा मित्रैः कुटुम्बसभ्यैः सह भुञ्जीयात्। सायंकाले देवालयं गत्वा अर्चक सकाशात् अथवा पण्डित सकाशात्, ज्योतिष शास्त्ररीत्या राष्ट्रस्य, देशस्य संवत्सरफलं सर्वेजनाः स्वस्व नक्षत्राणि अनसृत्य राशि फलञ्च जानीयुः। अनन्तरं ब्राह्मणादिभिः तेषां सत्कारं कुर्युः। नूतन संवत्सर प्रारम्भे वसंततौ प्रकृतिः विविध पत्रफलपुष्पैः शोभायमाना परिपुष्टाच भवति। पञ्चाङ्गं श्रवणेन तस्मिन् वत्सरे श्रौतस्मार्तादि कर्माणि व्रतोत्सवाश्चकदा अनुष्ठेयाः इति कालविशेषान् ज्ञातुं शक्यते।

श्रीकल्याणगुणावहं रिपुहरं दुःस्वप्न दोषापहं
गंगास्नानविशेष पुण्यफलदं गोदानतुल्यं नृणाम्।
आयुर्वृद्धिदमुत्तमं शुचिकरं सन्तान सम्पत्प्रदं
नानाकर्मसु साधनं समुचितं पञ्चाङ्गमाकर्ण्यताम्।।

पूर्वकालेजनाः युगादि उत्सवं आचरन्तिस्मेति भविष्यपुराणोत्तरभागे कथनात् ज्ञायते। श्रीकृष्णः धर्मराजं प्रति एवमुवाच। युगादिः कृतयुगे वैशाखमास शुक्लतृतीयायां त्रेतायुगे कार्तीक शुक्लनवम्यां द्वापरयुगे नभ त्रयोदश्यां

कलियुगे माघमास पूर्णिमायां आरब्धः इति कथ्यते। एताः तिथयः युगादयः इति पण्डितैः कीर्त्यन्ते।

**''युगादयश्च कथ्यन्ते तथैताः सर्व सूरिभिः''।**

कलियुगः माघपूर्णिमायां आरब्ध इति उपर्युक्त पुराणवचनं अस्माकं न प्रमाणं, कुत इति चेत् अस्माकं युगादिः चैत्रमास प्रारम्भे प्रचलति। धर्म सिंधुकारः निर्णयसिंधुः कारश्च युगादि पर्वदिनं संवत्सरारम्भे अनुष्टीयमानः उत्सव इति निर्णीतवन्तौ। धर्मसिन्धुकारः विशेषेण एवमाह - ''अत्र शुक्लप्रतिपदादिः अमान्त एवमासः प्रायेण दाक्षिणात्यै राद्रीयते। धर्म सिन्धुकारः जनैः युगादि पर्वदिने अनुष्टेयानि कर्माणि एवमाह।

''नूतनसंवत्सर कीर्तनाद्यारम्भं प्रतिगृहध्वजारोहणं निम्बपत्राशनं वत्सरादिश्रवणं नवरात्रारम्भः'' भवानीप्रसाद् महोदयः आर्यपर्वपद्धतिनामकं ग्रन्थं हिन्दी भाषायां प्रकाशितवान्। तत्र केषाञ्चन उत्सवानां चर्चा आसीत्। अस्मिन् ग्रन्थे युगादि महोत्सव विषयान् नवसंवत्सरोत्सवः अथवा संवत्सरेष्टिः इति शीर्षिकायां अलिखत्।

''मधुश्च माधवश्च वासन्तिकावृतू'' (कृष्णयजुर्वेदे) उपर्युक्तयजुर्वेदमन्त्रात् ज्ञायते यत् संवत्सरादिः वसन्तऋतुना आरब्ध इति, वसन्तर्तो मधुः माधवः वासन्तिका इत्यादि नामानि आसन्निति ज्ञायते। परन्तु कालक्रमेण चैत्रमासप्रारम्भ एव युगादिरिति लोके व्यवह्रियते। अस्मिन् विषये हेमाद्रि पण्डितः एवमाह।

''चैत्रमासि जगद्ब्रह्म ससर्ज प्रथमेहनि, शुक्लपक्षे समग्रन्तु तथा सूर्योदये सति।''

अर्थात् ब्रह्मदेवः चैत्रशुद्ध प्रतिपत्तिथौ जगत् सृष्टिं प्रारब्धवानिति अवगम्यते। पण्डितभवानी प्रसादस्य ग्रन्थात् इदं अवगम्यते यत् एष उत्सवः पारशीकाणामपि संवत्सरादिः आसीदिति, प्राचीनवेदकाले आर्याः पार्शीकाः सहजीवनं कुर्वन्तिस्म इत्यपि सूच्यते। ततः भवानी प्रसादस्य अभिप्राये एष महोत्सवः पूर्वं भारतदेशे सर्वत्र प्राचलत् इति ज्ञायते। अनन्तरं चान्द्र सौरमान भेदावनुसृत्य दक्षिण देशे चैत्रमासे उत्तरदेशे मेष संक्रमण दिने एष महोत्सवः जनैः अनुष्ठितः दृश्यते। पार्शी भाषायां युगादि महोत्सवः ''नौरोज्'' (नूतन दिनं) इति व्यवह्रियते। पार्शीकानां साधारणतया एष उत्सवः मार्चिमासे प्रचलति। अर्थात् वसन्तऋतौ चैत्रमासे अस्माकं युगादि महोत्सव काले एव तेषामपि नौरोज् उत्सवः प्रचलति। ज्योतिषशास्त्ररीत्या शालिवाहनशकं अनुसरन्तः जनाः इमं उत्सवं आचरन्ति। तेषु आन्ध्र-कर्णाटक-महाराष्ट्रदेशीयाः मुख्याः सन्ति।

अत्र द्वयोः शकयोः विषये महाराष्ट्रदेशे एका कथा प्रचारे वर्तते। पुरन्दरपुरे वर्तकः एकः अतीव धनवान् आसीत्। तस्य चत्वारः पुत्राः अभूवन्। अयं वर्तकः तस्य मरणात् पूर्वं पुत्रान् आहूय तेभ्यः चत्वारि पिहितानि पात्राणि दत्तवान्। तस्य मरणानन्तरमेव पात्रेषु निक्षिप्तं पदार्थं द्रष्टव्यं इति पुत्रान् आदिशत्। एवमेव चत्वारः पुत्रा अपि पितुः मरणानन्तरं पात्रस्थ पदार्थान् अपश्यन्। प्रथमपात्रे मृत्, द्वितीयपात्रे अंगाराः, तृतीयपात्रे अस्थीनि चतुर्थपात्रे पशुग्रासं आसन्। अस्य अभिप्रायं ते न ज्ञातवन्तः। तत्काले विक्रमार्कमहाराजः राज्यपालनं कुर्वन् अभूत्। वर्तकस्य चत्वारः पुत्राः पात्रेषु निक्षिप्तस्य पदार्थस्य अभिप्रायं

बोध्यतामिति विक्रमार्कमहाराजं अपृच्छन्। परन्तु विक्रमार्कः तस्य अन्तरार्थं ज्ञातुं नाशक्नोत्। तदा ते प्रतिष्ठानपुरं जग्मुः, तत्रापि राजा अन्ये सभासदस्याः तस्य अभिप्रायं वक्तुं न शक्नुवन्तः। तदा तस्मिन् ग्रामे एकः विचित्र बालकः तस्य अन्तरार्थं स्पष्टीचकार। स बालकः एकस्याः, ब्राह्मणविधवायाः पुत्रः आसीत्। सा ब्राह्मण स्त्री यौवनदशायाम् एव भर्तृहीना अभवत्। तस्याः द्वौ अनुजौ आस्ताम्। नागकुमारस्य तक्षकस्य संपर्कात् सा गर्भं दाधार। तस्मात् कारणात् तस्याः अनुजौ कोपाविष्टौ देशान्तरं गतवन्तौ। तदा अनाथायाः तस्याः एकः कुलालः आश्रयं अददात्। तस्मिन् गृहे अचिरकालात् ब्राह्मणस्त्री एकं बालकं प्रसूता। माता तस्य बालकस्य शालिवाहन इति नामकरणं अकरोत्। स बालकः दिन दिन प्रवर्धमानः आसीत्। स बालकः वर्तकस्य चतुष्पात्राणां समस्यां श्रुत्वा समस्यायाः परिष्कारं कर्तुं राजसभां गतवान्। मृदापूरितं पात्रं यः प्राप्तवान् सः भूमिं, अंगारैः पूरितं पात्रं यः प्राप्तवान् सः वृक्ष दारुणि, अस्थिभिः पूरितं पात्रं यः लब्धवान् सः गजतुरंग पश्वादीन् जन्तून्, पशुग्रासेन पूरितं पात्रं यः लब्धवान् सः धान्यं स्वीकर्तव्यमिति वर्तकस्य अभिप्रायं शालिवाहनः उक्तवान्। शालिवाहनः एवं प्रकारेण समयस्फूर्त्या समुचित निर्णयेन एतां समस्यां परिष्कृतवानिति ज्ञातः विक्रमार्कः तं द्रष्टुं कुतूहलेन वार्तां प्रेषितवान्। शालिवाहनः विक्रमार्कस्य आह्वानं तिरस्चकार। ''अहं राजसमीपं न गमिष्यामि राजा विक्रमार्क एव मां द्रष्टुं आगमिष्यति'' इत्युक्तवान्। एतां वार्तां श्रुत्वा विक्रमार्कः कोपाविष्टः सञ्जातः, विक्रमार्कः शालिवाहनं युद्धे संहर्तुं अपार बलं अथवा सैन्य समेतः अगच्छत्। शालिवाहनः विक्रमार्कस्य दण्डयात्रां ज्ञात्वा मृदा मानवप्रतिमाः कृत्वा तासां प्राणप्रतिष्ठामपि विधाय विक्रमार्कसैन्यस्योपरि प्रेषितवान्। उभयोः सेनयोः महान् संग्रामः प्रवृत्तः। शालिवाहनः सम्मोहनास्त्रं प्रयुज्य विक्रमार्क सैन्यस्य अपस्मार स्थितिं कल्पितवान्। तदा विक्रमार्कः वासुकि नामकं नागराजं संप्रार्थ्य स्व सैन्यस्य पुनर्जीवनाय औषधं लब्धवान्। औषध प्रभावात् विक्रमार्क सैन्यं पुनरुज्जीवितं अभूत् तदा शालिवाहन विक्रमार्कयोः संधिः प्राप्ता। उभयोः सैन्ययोः युद्धसमये आकाश वाणी तौ राजानौ उद्दिश्य ''नर्मदा नद्याः उत्तरभागे विक्रमार्कः दक्षिण प्रान्ते शालिवाहनः राज्यपालनं कुरुताम्'' इत्युक्त्वा युद्ध निवारणं कृतवती इति ज्ञायते।

प्राचीनकाले व्यासवाल्मीकादयः महर्षयः इतिहास पुराणागम ग्रन्थ रचनाभिः जनेषु ज्ञान वैराग्य भक्तिभावान् उत्पादयामासुः।

युगादि पर्वदिने एव पूर्वकाले ब्रह्मदेवः नूतनां सृष्टिं आरब्धवान्, तस्मिन्नेवदिने ब्रह्मदेवः देवान् तत्तत् कार्येषु नियुक्तवान्। तदारभ्य नूतनसंवत्सरादिः प्रचलति इति ब्रह्माण्डपुराणे उक्तम्। युगादि पर्वदिने एव जनाः नूतनान् व्यापारान् विद्या, उद्योग, गृहसम्बन्ध कार्याणि च आरभन्तेस्म ऐश्वर्यं, विजयं कीर्तिं च अलभन्त।

**व्रतवैशिष्ट्यं आचरणफलञ्च - अरण्यवासानन्तरं सीतालक्ष्मणसमेतः श्रीरामचन्द्रः अयोध्यानगरं प्रति चैत्रशुद्धप्रतिपत्तिथौ प्रयाणं कृतवान् इति ज्ञायते। तस्ममात् कारणादपि युगादिः पर्वदिनं अभूत्। वसुराजः भगवन्तं उद्दिश्य तपः कृत्वा राज्यं लब्धवान्। अनन्तरं देवेन्द्रः चैत्रशुद्धप्रतिपत्दिने प्रत्यक्षोभूत्वा वसुराजानां नूतन वस्त्रैः सन्मानितवान्। अस्माद् कारणादपि युगादि पर्वदिनं प्रसिद्धं अभूत्। श्रीरामचन्द्रं वसुराजानं च दृष्टान्तत्वेन स्वीकृत्य इदानीन्तन कालिकैः जनैरपि युगादि महोत्सवः भक्तिश्रद्धाभ्यां आचरणीयः। नूतनकार्यारम्भश्च करणीयः।**



# अहिंसा परमो धर्मः

- आचार्य चक्रवर्तिराघवन्
चरवाणी - ८३०९७३१२५४

मनुष्यस्य जीवने अहिंसा उत्तमोत्तमं स्थानं प्राप्नोतिः क्षमा वात्सल्यं इत्यादि गुणाः एकस्य मनुष्यस्य तत्कृतक्रियापेक्षाः भवन्ति। किन्तु अहिंसा क्रियापेक्षा न भवति। यतोहि स्वयं भूतेषु हिंसाभावनारहितः भवति। एतदेव 'अहिंसा' इति शब्दन गृह्यते। तस्मादेव कारणात् इदानीं अबलाः बलहीनाः मनुष्याः जन्तवश्च जगति स्वेच्छया यथासुखम् अटन्ति।

एतदेव महाभारते

अहिंसा सत्यवचनम् अक्रोधःक्षान्तिः आर्जवम्।
गुरूणां नित्य शुश्रूषा वृद्धानामपि पूजनम्।।
''शौचमकार्यं सत्यागः सदा पथ्यस्य भोजनम्।
एवमादि गुणं वृत्तं नराणां दीर्घजीविनाम्।।

अत्र नराणां दीर्घ जीवनार्थं 'अहिंसा' इति गुणः उक्तः।

अहिंसा एव परमो धर्मः अहिंसा एव परमं सुखं अहिंसा एव सर्वेषु धर्मशास्त्रेषु उत्कृष्टरूपेण उक्तमिति -

''अहिंसा परमो धर्मः हि अहिंसा परमं सुखम्।
अहिंसा धर्म शास्त्रेषु सर्वेषु परमं पदम्'' इति

पद्म पुराणे अपि व्याघ्र-पशु संवादे पशुः व्याघ्रं दृष्ट्वा एवं वदति -

यथा हस्ति पदे हि अन्यपदम् सर्वं प्रलीयते।
सर्वे धर्माः तथा व्याघ्र प्रतीयन्ते हि अहिंसया।।

''हे व्याघ्र! यथा गजस्य पादः यत्र प्रलीयते तत्र पूर्वतन जन्तूनां पादच्छाया अदृश्यं भवति। तथैव अहिंसा इति गुणे सर्वे धर्माः सर्वे गुणाः अपि अन्तर्भवन्त्येव। यदि अहिंसा भवता परिपाल्यते तदानीं अन्ये दोष गुणाः अपि निर्गच्छन्तीति गौः व्याघ्राय संबोधितवती।

एवमेव चराचराणां भूतानां यः हिंसां न करोति सः सर्वतो मुखेन भयं त्यक्त्वा विष्णु पदं प्राप्नोतीति अर्थात् कारणं विना स्थावराणां वृक्षाणां छेदनं न करणीयमिति उच्यते। तदेव पुराणे -

चराचराणां भूतानां अभयं यः प्रयच्छति।
सः सर्वभयसंत्यक्तः परं ब्रह्माधिगच्छति।। इति

सर्वैः सर्वेषां दानानां अन्नदानं विद्यादानं वस्त्र दानं इत्येव प्रशंसार्हं इति कथ्यते। किन्तु सर्वप्राणिनाम् अभयमेव अर्थात् अहिंसा एव उत्तमं दानमिति, तादृश दानं चराचराणाम् आवश्यकमित्युच्यते। अनेन दानेन अस्मिन्प्रपञ्चे अस्माभिः भयं विना स्थिर बुद्ध्या जीवनं यापयितुं शक्यते। अर्थात् एतदपेक्षया अन्यत् दानं जगति किमपि न भवतीति ज्ञायते तदेव

''सर्वेषामेव दानानां इदमेकमनुत्तमम्।
अभयं सर्वभूतानां नास्तिदानमतः परम्।।'' इत्युक्तम्।

महाभारते अहिंसायाः विषये बहुप्रकारेण विवरणं दत्तमस्ति। अत्र अहिंसा नाम उत्तमः धर्मः, क्षमः, दानं, तपः, यज्ञः फलम्, मित्रं सुखं इति अहिंसा एव सर्वमिति निरूपितमस्ति।

अहिंसा परमो धर्मः तथा अहिंसा परमो क्षमः।
अहिंसा परमं दानं अहिंसा परमं तपः।।
अहिंसा परमो यज्ञः तथाऽहिंसा परं फलम्।
अहिंसा परमं मित्रं अहिंसा परमं सुखम्।। इति

वस्तुतः कृत युगे तपः एव प्राधान्यमावहति। त्रेतायुगे ज्ञान कर्मणोः श्रेष्ठत्वं भवति। द्वापरे यज्ञादि कर्म एव उत्तमं भवति। किन्तु कलियुगेऽस्मिन् दानमेव उत्तममिति पद्मपुराणे उक्तम्। एतद्दानन्तु अहिंसा एवेति निश्चप्रचम्। एतदेव

''तपः कृते प्रशंसन्ति त्रेतायां ज्ञानकर्मणी।
द्वापरे यज्ञमेवाहुः दानमेकं कलौ युगे।।

अनेन कलियुगे शास्त्रादेशानुसारं अहिंसा अर्थात् सर्वभूत दयारूपेण यः मानवः जीवनयापनं करोति सः अवश्यं श्रीवैकुण्ठं प्राप्नोतीति शम्।



# आसुरीगुणेभ्यः पतनं तथ्यम्

तेलुगु मूलम् - डा।। वैष्णवांघ्रि सेवकदासः
संस्कृतानुवादः डा. सि.आदिलक्ष्मीः
चरवाणी - ९९४९८७२१४९






दैवीगुणाः, आसुरी गुणाः इति गुणाः द्विविधाः भवन्ति। भगवतः नियमनिबन्धान् आदेशान् दैवीगुणसम्पन्नाः अथवा देवताः पालनं कुर्वन्ति। असुराः दैवनियमनिम्बन्धानुल्लङ्घयन्ति। सामान्यतया देशे प्रभुत्वशासनं परिपालनीयाः, उल्लङ्घनीयाः शासनविरुद्धतया व्यवहुताः लोके भवन्ति। प्रभुत्वशासनानुसरणीयाः नागरिक पौराः एवं शासनविरुद्धतया वर्तनीयाः अनागरिकदुष्कर्मसूदनः भवन्ति। शासनानुकूलतया ये जीवन्ति ते स्वच्छतया जीवन्ति। परन्तु शासनविरोधतया डाम्बिकतया बहिसञ्चारकारणेन येकस्मिन् दिने बन्धी भवन्ति। भगवद्गीतायामेतद्विषयं (१६.५) स्पष्टतया कथयन् ''दैवीगुणाः मोक्षानुकूलतया भवन्तीति, एवमेवासुरी गुणाः बन्धकारकाः भवन्तीत्यकथयत्। हे! पाण्डुसूदन! त्वं दैवीगुणैरुत्पन्नोऽसि।'' अतः लेशोऽपि दुःखं मास्तु इत्यप्युक्तमस्ति। दैवीगुणेषु प्रप्रथमं गुणम ''अभयम्।'' अर्थात् भयराहित्यम्। मानवस्यापजयस्य कारणं भयमेव। यथा भयं हृदये प्रवेशति तथा पराजयं प्रारम्भं भवति। मानवस्य शारीरिक बलं अल्पमपि भवतु नाम शैलसदृशं आत्मबलं वर्तते चेत् यत्किमपि बृहत्कार्यमवश्यं साधयिष्यति। आसुरीगुणेषु प्रप्रथमगुणं ''दम्भः''। अर्थात् गर्वः। गर्वमनेककारणैः आगच्छति। सौन्दर्यं दृष्ट्वा धनं दृष्ट्वा, बलं दृष्ट्वा, पदवीं दृष्टवासुरीजनाः गर्विष्टाः भवन्ति। परन्तु गर्वकारणभूतं विषयं तेषां क्षणेनैव नाशयिष्यति। तपः शक्त्या राक्षसाः देवनामुपरि वारम्वारं दण्डयात्राकरणमपि शास्त्रेषु दृश्यते।

चरित्रे बहवः आगताः पुनः गताः। तेषां कालेषु जनाः तेषां वाक्यानि श्रृण्वन्नपि, तत्तद्दासुरीनायकानां नामानि शाश्वतया स्थिराः न भवन्ति। आसुरीगुणेषु द्वितीयः गुणः दम्भः, तृतीयः अहङ्कारः चतुर्थः क्रोधः पञ्चमः कटु स्वभावः ये पञ्चासुरी गुणाः अज्ञानेनोत्पन्नाः भवन्ति। अज्ञानमित्युक्ते यथार्थज्ञानमविद्यत्वम्। ज्ञानरहितमेवाज्ञानम्। प्रकाशराहित्यमेवान्धकारस्यकारणत्वात्। ज्ञानरहितमेज्ञानवास्य कारणं भवति। आसुरीगुणैः बन्धः सिद्धयति। पञ्जरे बन्धीभूतः शुकः सुखं न जीवति किल। पञ्जरे बन्धीभूतः मूषिकः सुखं न जीवति किल। कारागारे स्थितः बन्धी स्वेच्छतानुभवति किल। एवमेव बन्धानुभूतासुरीगुणाः कदापि सुखं न दास्यन्ति।

अतः यस्य दैवीगुणाः भवन्ति तत्रावरोधाः वर्ततेरपि दुःखस्यावश्यावसरः एव नास्ति। यथाकदाचिदपि दुःखराहित्यमवश्यं सिद्धयति। पाण्डवाः दैवीगुणसम्पन्नाः। ते बहुनि दुःखानि प्राप्तन्यपि अन्ततः दुःखराहित्यंगतमेव। येषां दैवीगुणाः भवन्ति तेषां दुःखं दुरे तिष्ठति। अतः युवकाः सदा दैवीगुणप्राप्तये उत्सुकाः भवितव्याः। एवमेव गर्वाहङ्कारक्रोधकटुस्वभावात् पूर्णतया बहिरागतव्यः। एतादृशासुरीस्वभावनभिज्ञातुं कतिचन विषयानि ज्ञातव्यानि। विद्या, धनं, सौन्दर्यं दृष्ट्वा ते गर्वतया व्यवहरन्ति। गर्वं तेषां मुखेष्वेव बहिर्गतं भवति। सर्वे तेषां पूजार्थं वाञ्छन्ति। गौरवार्हाः न भवन्यपि गौरवं प्राप्तुं उत्सुकाः भवन्ति। लघुविषयोपरि क्रोधं दर्शयित्वा कटुतया सम्भाषयन्ति मृदुभाषणं ते पूर्णतया न जानन्ति। कर्तव्याकर्तव्यज्ञानम न जानन्ति। प्रामाणिकविषयाः न स्वकीकृत्या स्वमनसि स्थितभावनानुसारं व्यवहरन्ति। एतादृशासुरीस्वभाविनः सहजतया दुःखभागिनः भवन्ति। अतः दैवीगुणस्वभाविनः यदाकदापि शोकाकुलाः न भवन्ति। अद्यतन युवकाः दैवीगुणान् सम्पादयित्वा शुभानि प्राप्तुमाशास्महे।



तिरुमलतिरुपतिदेवस्थानम्

# तरिगोंड
# श्रीलक्ष्मीनरसिंहस्वामिनः ब्रह्मोत्सवः

०२.०३.२०२० तः १०.०३.२०२० पर्यन्तम्











**०२.०३.२०२० इन्दुवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - हंसवाहनम्

**०३.०३.२०२० भौम्यवासरः**
प्रातः - मौक्तिकमण्डपम्
रात्रौ - हनुमद्वाहनम्

**०४.०३.२०२० सौम्यवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सिंहवाहनम्

**०५.०३.२०२० बृहस्पतिवासरः**
प्रातः - तिरुच्चि उत्सवः
रातौ - महाशेषवाहनम्

**०६.०३.२०२० भृगुवासरः**
प्रातः - तिरुच्चि उत्सवः
रात्रौ - गजवाहनम्

**०७.०३.२०२० स्थिरवासरः**
प्रातः - तिरुच्चि उत्सवः
सायं - सर्वभूपालवाहनम्
रात्रौ - कल्याणोत्सवः
गरुडवाहनम्

**०८.०३.२०२० भानुवासरः**
प्रातः रथोत्सवः
रात्रौ - धूळि उत्सवः

**०९.०३.२०२० इन्दुवासरः**
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चंद्रप्रभवाहनम्,
अश्ववाहनम्

**१०.०३.२०२० भौम्यवासरः**
प्रातः - वसन्तोत्सवः,
चक्रस्नानम्
रातौ - धवाजावरोहणम्

तिरुमलतिरुपतिदेवस्थानम्

## तिरुमल क्षेत्रे रथसप्तमी पर्वदिने श्री स्वामिनः प्रचलिताः सप्तवाहन सेवाः

०१.०२.२०२०

















## तिरुमलतिरुपतिदेवस्थानम्

## तिरुचानूरु क्षेत्रे रथसप्तमी पर्वदिने श्री पद्मावती मातुः प्रचलिताः सप्तवाहन सेवाः

०१-०२-२०२०















२०२० फिब्रवरि ०४ दिने
वेङ्कटेश्वर वेटर्नरीयूनिवर्सिटी
स्नातकोत्सवे मुख्यअतिथिरूपेण आगतानां
आन्ध्रप्रदेश् राष्ट्र गवर्नर् गौ.श्री विश्वभूषण् हरिचंदन् महोदयानां
ति.ति.दे. श्री पद्मावती अतिथिगृहे स्वागतं कुर्वण:
ति.ति.दे. संयुक्तकार्यनिर्वहणाधिकारी श्री पि.बसंत् कुमार् ऐ.ए.यस्
मुख्य निघा तथा भद्रताधिकारी श्री गोपीनाथ् जेट्टि ऐ.पि.यस्,
तुडा अध्यक्ष: ति.ति.दे. एक्स् अफिषियो सभ्य:
श्री चेविरेड्डि भास्कर् रेड्डि महोदय:।



तिरुपति श्री गोविन्दराजस्वामिन: वार्षिक प्लवोत्सवा: फिब्रवरि ०२ त: ०८ पर्यन्तं प्रचलिता:।
ऐषु उत्सवेषु भागत्वेन श्रीकोदण्डरामस्वामी, श्री पार्थसारथि स्वामी, श्री कल्याणवेङ्कटेश्वरस्वामी,
श्रीकृष्णस्वामी गोदादेवी एवं श्री गोविन्दराजस्वामी प्लवेषु विहारं चक्रु:।





जनवरि २६ दिनाङ्के गणतन्त्रदिनोत्सव सन्दर्भे ति.ति.दे. परिपालना भवनस्य क्रीडा मैदाने जातीय पताकं अविष्कृत्य
सैनिक वंदनं स्वीकृता: ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् ऐ.ए.यस्।
अस्मिन् कार्यक्रमे ति.ति.दे. अडिषनल् कार्यनिर्वहणाधिकारी: श्री ए.वि.धर्मारेड्डि, ति.ति.दे. संयुक्तकार्यनिर्वहणाधिकारी श्री पि.बसंत् कुमार् ऐ.ए.यस्
मुख्यनिघा, भद्रताधिकारी श्रीगोपीनाथ्जेट्टि ऐ.पि.यस् तथा उन्नताधिकारिण:, ति.ति.दे. उद्योगिन: भागं गृहीता:।



# सिद्धान्त ज्योतिषस्य परिचयः

- कु.के.श्रावणी रेड्डि
चरवाणी - ७०३६२३५२४९

वेदस्य षड् अङ्गानि निगदितानि सन्ति। शिक्षां तस्य ग्रहणम् व्याकरणम् मुखम् निरुक्तम् श्रौत्रम् छन्दः पादौ, कल्पः करौ, ज्योतिषं च नेत्रे। षड् अङ्गेषु ज्योतिषस्य मुख्यत्वम् निगदितम्। वेदस्य षट्सु अङ्गेषु ज्योतिषम् चक्षुषत्वेन सर्वाधिक महत्वपूर्णम् स्थानम् धारयति। कर्ण नासादिभिः विहीनः जनस्तु किमपि कार्यं कर्तुं शक्नोति परन्तु चक्षुषाहीनस्तु किमपि करणे असमर्थो भवति। अत एव भास्कराचार्येण उक्तम् : -

''वेदचक्षुः किलेदं स्मृतं ज्योतिषं मुख्यता चाङ्गमध्येऽस्य तनोच्यते।
संयुतोऽपीतरैः कर्णनासादिभिः चक्षुषाङ्गेन हीनो न किञ्चित्करः।।

ज्योतिष शास्त्रं सिद्धान्त - संहिता होरा भेदेन त्रिषु स्कन्धेषु विभक्तमस्ति। सिद्धान्तज्योतिषशास्त्रं गणितशब्देनापि अभिधीयते। स्कन्धोऽयं ग्रहगणित पाटीगणित - बीजगणित भेदेन त्रिविधः। ब्रह्मा, वसिष्ठः, सोमः सूर्यश्च प्रवर्तकत्वेन स्मृता आचार्याः सन्ति। अनन्तरम् आर्यभट् ब्रह्मगुप्त, वराहमिहिर भास्कराचार्य कमलाकरप्रभृतयः आचार्याः सन्ति।

आर्षः सूर्यसिद्धान्तः, आर्यभटस्य आर्यभटयम् ब्रह्मगुप्तस्य ब्रह्मस्फुटसिद्धान्तः, वराहमिहिरस्य पञ्चसिद्धान्तिका, भास्कराचार्यस्य सिद्धान्तशिरोमणिः, कमलाकरस्य सिद्धान्ततत्वविवेकः, लगध नाम्ना मुनिना प्रणीतो वेदाङ्गज्योतिषाख्यो ग्रन्थः एव अस्य सकन्धस्य प्रथमः ग्रन्थः मन्यन्ते।

### सिद्धान्तज्योतिषस्य परिभाषा -

अन्ते सिद्धः सिद्धान्तः इति निर्वचनेन निरीक्षण-परीक्षणदिभिः, ग्रहगणित सम्बन्धितं यन्मतं अन्ते उपस्थाप्यते तदेव सिद्धान्तपवाच्य उदाहरणार्थं अहर्गणोदयान्तरदेशान्तर चर-मन्दफल-शीघ्रफलादि संस्काराणां संस्कारैः ग्रहाः स्पष्टाः भवन्ति। स्पष्टे सति वेदशालायां गत्वा तद ग्रहगणितं सिद्धः करणार्थं वेधकार्यं क्रीयते। तदा यदि अस्माकं गणितं दृक्रि दृष्टि उपलब्दे भवेत् तदेव ते ग्रहाः ज्योतिष शास्त्रे प्रयुज्यन्ते। अतः वक्तुं शक्यते यत्



छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः।।

अर्न्त सिद्धः सिद्धान्तः इति। अनेनैव ज्योतिषशास्त्रस्यापि प्रत्यक्षत्वं सिद्यति।

भास्कराचार्यस्य मते यत्र त्रुटयादितः प्रलयान्तं कालगणना सौरचन्द्रादि नवविध कालानां प्रभेदाः, ग्रहचारस्य नियमाः. व्यक्ताव्यक्त गणितयोर्विवेचनं, दिग्देशकालानां ज्ञानं, भूगोल, खगोल- ग्रहणाञ्च स्थितिः, वेधयन्त्राणाञ्च साङ्गोपाङ्गविवेचनं भवति सः सिद्धान्तः

**त्रुटयादिप्रलयान्तकालकलना मानप्रभेदः क्रमा-**

**च्चारश्च द्युसदां द्विधा च गणितं प्रश्नस्तथा सोत्तराः।**
**भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते।**
**सिद्धान्तः स उदाहतोऽत्र गणित स्कन्धस्तृतीयोऽपरः।।**

अयं सिद्धान्त स्कन्धः ज्योतिषशास्त्रस्य त्रिषु स्कन्धेषु सर्वाधिकं महत्व विद्यते। सिद्धान्तं विना होरा संहितयोः किमपि महत्वं नावशिष्यते। स्कन्धोऽयं ज्योतिषस्य आधारः प्रकीर्तितः ज्योतिर्विद्धिः। यतोऽहि होरा स्कन्धस्य विषयोऽस्ति ग्रहाणां मानवजीवनोपरि शुभाशुभविवाद विवेचनं तथाच संहिता स्कन्धस्य विषयोऽस्ति भुगोल विषयीनां समिष्टीकरणम् परं सिद्धान्तस्य विषयोऽस्ति ग्रहगणितं ग्रहस्पष्टीकर वा। ग्रहस्पष्टीकरणं विना ग्रहस्य प्रभातवर्णनं कथमपि कर्तुं शक्यते।

**सिद्धान्तज्योतिषस्य भेदाः -** त्रयो भेदाः वर्तते। सिद्धान्तः, तन्त्र करणश्चेति।

आदौ सिद्धान्तः सृष्ट्यादिः यत् ग्रहज्ञानं सिद्धान्तः स उदाहृतः। अद्यत्वे प्रमुखसिद्धान्तग्रन्थेषु सुप्रसिद्धार्षग्रन्थः सूर्यसिद्धान्तः। द्वितीयम् तन्त्रम्ः - ''युगादितो यत्र ग्रहज्ञानं तन्त्रं निगद्यते।'' अर्थात् यत्र युगादितो ग्रहगणितं कीयते तत् तन्त्र गणितम् भवति। तन्त्रग्रन्थेषु आर्यभटस्य आर्यभटीयं सुप्रसिद्धं भवति। अस्य तन्त्र ग्रन्थस्य गणित पादे वर्गमूलानयनम्, धनमूलानयनम् व्यासात् परिधि साधनम् अतीव स्पष्टरीत्या कृतं विद्यते। गोलपादे भूमेः स्वाक्षभ्रमणस्य आधारभूतसिद्धान्तः प्रतिपादितः। तत्र वैज्ञनिक

**उदाहरणम् -**

**''अनुलोमगतिनौस्यः पश्यत्यचलं विलोमगं थद्वत्।**
**अचलानि भानि तद्वत् समपश्चिमगानि लङ्कायाम्।।**

तृतीयम् करणम्ः - ''शकद्। यत्र ग्रहज्ञानं करणं तत् प्रकीर्तितम्''। अर्थात् यत्र अभीष्ट शकाब्द तः ग्रहज्ञानं ग्रहगणितं वा निरुष्यते तत् करणमित्युच्यते। करणग्रन्थेषु ''ग्रहलाधव - केतकीग्रहगणितं सर्वानन्दकरणादयः ग्रन्थाः सुप्रसिद्धाः।

सिद्धान्तग्रन्थेषु कल्पादितः त्रुटयादितो वा, तन्त्रग्रन्थेषु युगादितः तथा च करणग्रन्थेषु इष्टशकाब्दतोऽहर्गणानयनं निरुप्य मध्यमग्रहानयनं ततश्च ग्रहस्पष्टी करणं भवति।

सिद्धान्तज्योतिषस्य प्रमुखविषयाः भवन्ति अहर्गणानयनम्, भ्रपरिधिसाधनम्, देशान्तरज्ञानम्, उदयान्तरसाधनम्, चरकालज्ञानम्, अयनांश विचारः, ग्रहणविचारः, भूगोलवर्णनम्, मध्यमाधिकारः, ग्रहस्पष्टीकरणम्, दिग्देशकालेति त्रिप्रश्नाः, छेद्यकाधिकारः, ग्रहयुत्यधिकारः, भग्रहयुतिः, पातविचारः कालमानानि इत्यादयः सिद्धान्तज्योतिषस्य प्रमुख विषयाः भवन्ति।

अस्य सिद्धान्तस्य अवबोधाय भास्कराचार्य कृत लीलावती गणितं, बीजगणित, रेखगणित, गोल परिभाषादि ग्रन्थानां अध्ययनेन मौलिक ज्ञानं आप्तुं शक्नुमः। अस्य सिद्धान्तस्य अवगमनानन्तरं फलितं ज्योतिषस्य अवबोधः सुकरः इति संविश्वासं विद्वांसः संलपन्ति। तर्हि सिद्धान्त प्रवेशं कृत्वा सिद्धन्त महिमां आप्नुवन्ति इति कामये। 

# श्रीकुलशेखरसूरिवैभवम्

- डा. केशवप्रपन्न पाण्डे
चरवाणी ८१२४९७०३१६

**कुम्भे पुनर्वसौ जातं केरळे केळिपट्टने।**
**कौस्तुभांशं प्रपद्येऽहं राजानं कुलशेखरम्।।**

भरतखण्डे केरळे देवभाषया तिरुवञ्चिकलम् इति प्रथिता काचन नगरी। तत्र शेराख्ये क्षत्रियकुले भगवतः कौस्तुभांशः श्रीकुलशेखरनामा नरपतिः अवतार। कलौ संप्तविंशति संख्याकेषु। हायनेषु अतीतेषु पराभवनाम्नि संवत्सरे कुम्भमासि



शुक्लद्वादशीयुते गुरुवासरे महानुभावोऽयं भुवमिमामलंचकार। कुलशेखरराडयं भगवत्कृपा कटाक्षजनितनिखिलत्वज्ञानः विजितेन्द्रियः, समुज्झिताभिमानः जगदिदं निस्वार्थेन भावेन परिपालयामास। प्रजा अपि तदाचरितधर्मपथि एव आत्मनः नियोज्य धर्मपथात् रेखामात्रमपि इतस्ततः नातिक्रमामन्ति स्म। सर्वेऽपि वर्णाश्रमिनः स्वस्वधर्मे सर्वथा आरुढाः सन्तः करणत्रयेणापि शास्त्रोक्तस्वस्वधर्माचारान् श्रद्धयानुसस्नुः। कुलशेखरसूरिश्चायं सदा भगवति न्यस्तसमस्तात्मभारः राजकीयविविधकलाकार्यकलापांश्च भगवन्निष्ठ एव लीलया वहति स्म।

परन्तु सन्ततं भगवदनुभजनितातिशय प्रेम्णा भगवदभिमततम श्रीङ्कक्षेत्रयात्रोत्सुकतया रङ्गनाथदिव्यदर्शन अभिलाषी प्रत्यहं श्रीरङ्गदिव्यक्षेत्रयात्रामुद्घोषयति स्म। मुकुन्दमालायाः प्रथमादेव पद्यादस्य दिव्यसूरेः श्रीरङ्गयात्रां प्रति विद्यमानानुपमा उत्सकुता परा श्रद्धा च महती दृश्यते। यथा -

**घुष्यते यस्य नगरे रङ्गयात्रा दिने दिने।**
**तमहं शिरसा वन्दे राजानं कुलशेखरम्।।**

किञ्चायं दिव्यसूरिः **''इतिहास 'पुराणाभ्यां वेदं समुपबृंहयेत्''** इति शास्त्रोक्तचनमनुसृत्य निखिलवेदवेदाङ्गवेद्य परतत्त्वनिर्णयपरं इतिहासश्रेष्ठं श्रीमद्रामायणं विदुषां मुखारविन्देभ्यः सश्रद्धं प्रतिदिनमश्रृणोत्। तथा सति श्रीमद्रामायाणकथावसरे क्रमप्राप्तमेकं प्रसङ्गं

**चर्तुदसहस्राानि रक्षसां भीमकर्मणाम्।**
**एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति।।**
(रा.३.२४.२३)

इत्याकर्ण्य निरतिशयरामभक्तिपरवशः सन् पुरातनं अपि तदितिवृत्तं तदानीन्तनं मन्वानः सद्यो युद्धे भगवतो रामस्य साहाय्यार्थं स्वस्य चतुरङ्गिणीसेनाभिः स्वय नानाप्रहरणादिभिः परिकर्मितः राज्याद्वहिर्निजगाम। तदुनुतत्सचिवराः चातुर्येण केनाचित् तरुणविदुषा कथञ्चिद्रामायणप्रसङ्गान्तरं उपस्थाप्य -

**तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम्।**
**बुभूव हृष्ट्वा वैदेही भर्तारं परिषष्वजे।।**

(२१.३-३०-३९)

इति श्लोकार्थं श्रावयामासुः। एवं एतादृशं राघवस्य विजयशंसिनं वृत्तान्तं श्रुत्वा हर्षमनाः स राजा कुलखेखरसूरिः ततो युद्धभूमेः स्वसेनाभिः सह भगवन्तं राममेवानुध्यायन् स्वनगराभिमुखं न्यवर्तत।

एवं बहूनि राज्ञः कुलशेखरमहात्मनः भगवति महत्प्रीतिवशाचरितानि चरितानि विलक्षणानि सुविख्यातानि श्रीसंप्रदायजगति। तेष्वन्यतमैका कथा शज्ञः कुलशेखरसूरेः भागवतेषु स्थितं महान्तं विस्रब्धं समादरभावं प्रीतिंश्च प्रकटीकरोति। एकदा राज्ञः नीतिपथनिष्णाताः सचिवाः तस्य भागवतजनसम्पर्कं विच्छेत्तुकामाः राज्ञो नित्याराध्यस्य देवदेवस्य रामस्य रत्नमयं हारमेकमपहृत्य तदीयेषु परमसात्विकेषु भागवतेषु तदपहारित्वदोषमारोपयन्, परं भगवत्कृपाकटाक्षेण प्रत्यक्षितसकलवृत्तान्तः भागवतानां परिशुद्धतां सकललोकविदितां कर्तुमनाः विषधरस्थापिते एकस्मिन् घटे स्वहस्तं प्रवेश्य विषधरं सर्पं बहिरानयामास। हन्त! परं सर्पो स्रगजायत। तदा लज्जिताः तदमात्याः स्वदुराचारानङ्गीकृत्य क्षमां प्रार्थयामासुः। ततो भगवते तं हारं समर्प्य राजापि कुलशेखरः सुचिराभिलषितां स्वनगरे असकृदुद्धुष्टां रङ्गयात्रां सफलयामास।

तत्र भगवतो रङ्गनाथस्यासीमकृपया प्राप्ततदीयदर्शनः आत्मानं धन्यं मेने। सूरिरयं विविधभगवदनुभवपरीवाहरूपं पञ्चोत्तरशतपद्यपरिमितं पेरुमाळ् तिरुमोळि'' इति प्रसिद्धं द्राविडभाषामयं प्रबन्धं विरचय्य लोकमिममुपचकार।

१. तत्र प्रथमदशके सर्वैरपि अवयवैः करणत्रयेणापि च भगवतः श्रीरङ्गनाथस्य विषये अनुभवः कदाकदेति निवेदयामास।

२. द्वितीयदशके परमपुरुषानुभवजनित किङ्करता, ततो भगवतः किङ्कराणां विषये किङ्करता, अन्ततो भागवत चरणारविन्दपांसुलतां आत्मनः शरणमिति संभावयति।

३. तृतीयदशके - देहाभिमानिनां विषयप्रवणानां आनात्मज्ञानां सहवासेऽनभिरुचिं प्रार्थयन् स्वस्य भगवदेकप्रावण्यं प्रकटी - चकार।

४. तुरीये-तु भगवान् रङ्गनाथः वेङ्कटाचलेऽपि सन्निधत्ते इति धिया महत्या भक्त्या च तदधीशं श्रीनिवासं शरणभुपगम्य कैङ्कर्यादीनि संप्रार्थ्य तत्रैव तिर्यकस्थावरजन्मानि प्रार्थयति।

५. पञ्चमे स्वस्यानन्यगतित्वमनेकैः निदर्शनैः उय्यवन्दपेरुमाळ् सन्निधौ विज्ञाप्य भगवदेकस्योपायत्वमुररीकरोति।

७.सप्तमे यशोदानुभूतां श्रीकृष्णबाललीलाम् अनालोकितवत्याः कृष्णजनन्याः देवक्याः प्रलापप्रकाराः, ८.ततोऽष्टमे बालस्य श्रीरामस्य डोलायां कौसल्या भावेन लालनवर्णनम्, ९.नवमे भगवतो रामस्य वनवासप्रस्थानसमये विश्लेषमसहमानो दशरथो भूत्वा तदात्म्यात् कुलशेखरसूरेः विलापः।

दशमे दशके तु रामभक्तोऽयं रामायणस्य काण्डसप्तकथाः अन्ववादीत्।

किञ्च संस्कृतभाषायां मुकुन्दमालानाम्नीं भक्तिरसनिष्यन्दिनीं अतिललितपदगुम्भितां भगवतो नारायणस्य सर्वस्मात्परत्वप्रतिपादिनीं नित्यमनुसन्धीयमानां स्तुतिं विरचय्य भगवद्भक्ताननुजग्राहायं दिव्यसूरिः। एतैश्च दिव्यसूरिभिरुपदिष्टाः भगवदनुभवपरीवाहरुपा प्रबन्धाः दिव्यप्रबन्धाः इत्युच्यन्ते। अपि चैतैः दिव्यसूरिभिरनुभूतानि सङ्कीर्तितानि च दिव्यक्षेत्राणि दिव्यदेशा इति व्यपदिश्यन्ते यतोहि स्वयं विशेषतो भगवान् तेषु क्षेत्रेषु महतादरेण सन्निहितः। एवं भगवद्भाक्तिभरितहृदयानां दिव्यसूरिणां दिव्यचरितं तैरनुभूतानां दिव्यगाथानामनुभवेन चात्मनः कृतकृत्यान् संभाव्य विरम्यते। अपि च लेखस्यास्य लेखने वेङ्कटाचार्यगुरूणां ग्रन्थः पी.बी.स्वामिनां ग्रन्थश्च महदुपकारिणौ आस्तामिति कार्तज्ञ्यं निवेद्यते।





# लक्ष्मीपञ्चमी व्रतकथा

- टि.हरिप्रिया
चरवाणी - ८०९९८०९५०३

गृहे सुखसमृद्धिधनप्राप्त्यर्थं भगवत्याः लक्ष्म्याः उपासनायाः इदं पर्व अतिमहत्वपूर्णं वर्तते।

**लक्ष्मीपञ्चम्याः व्रतकथा : -**

पौराणिकग्रन्थेषु या कथा प्राप्यते तदनुसारं भगवती लक्ष्मी एकदा देवेभ्यः खिन्नमनस्का जाता एवं क्षीरसागरे विलीना विलुप्ता च येन देवताः श्रीविहीनाः अभूवन्। तदा देवराज्ञा इन्द्रेण मातरं लक्ष्मीं प्रसादयितुं कठिनतमा तपस्या विहिता, विशेषविधिविधानेन उपवासो अपि कृतः। तस्य अनुकरणं कुर्वद्भिः अन्यैः अपि देवैः मातरं लक्ष्मीं प्रसादयितुं उपावासः कृतः। न केवलं देवैः अपितु राक्षसैः अपि भगवती लक्ष्मी पूजिता। स्वभक्तानाम् उपासनया तुष्टिरवाप्ता। व्रतसमाप्ति अनन्तरं पुनः उत्पन्ना जाता तदनन्तरं भगवता विष्णुना सह उद्वाहः अपि सञ्जातः। देवाः पुनः श्रीं लब्ध्वा लक्ष्म्याः कृपां प्राप्त्वा धन्याः अभूवन्।

इयं मान्यता अस्ति यत् तस्मिन् दिने तिथिः चैत्रमासशुक्लपक्षस्य पञ्चमीतिथिः आसीत्। अतः एव इयं तिथिः लक्ष्मीपञ्चमीव्रतरूपेण समायोज्यते। लक्ष्मीदेवी धनवैभवप्रदात्री इति उच्यते। सा सुखशान्तिसमृद्धिदात्री या विष्णुप्रिया हरिप्रिया इत्यपि आख्यायते। यस्याः उल्लेखः ऋग्वेदस्य श्रीसूक्ते उपलभ्यते।

लक्ष्म्याः यस्योपरि अनुग्रहो भवति सः दारिद्र्यदुर्बल कृपण असंतोषेण ग्रसितः न भवति।

महालक्ष्म्याः अनेके रूपाः विख्याताः तेषु तस्याः अष्टस्वरूपाः ये 'अष्टलक्ष्मी' नाम्ना प्रसिद्धाः।

लक्ष्मीः प्रसन्नतयाः उत्साहस्य विनोदस्य च देवी इति अभिमन्यते। अस्याः भक्त्या उपासनया पूजया च धनप्राप्तिः ऐश्वर्यप्राप्तिः सुखशान्तिसमृद्धीनां प्राप्तिः च भवति।

इयं मान्यता अस्ति यद् चैत्रमासस्य शुक्लपक्षस्य पञ्चम्यां तिथौ भगवत्याः लक्ष्म्याः अर्चना क्रियते। अन्यच्च इमां तोषयितुम् अस्मिन् एव दिने समर्चनेन सह आदिनम् उपवासो अपि धार्यते। अनेन कारणेन एव इयं पञ्चमीतिथिः लक्ष्मीपञ्चमी अथवा श्रीपञ्चमी इत्याख्यायते। यद्यपि श्रीपञ्चमी इति भगवत्याः सरस्वत्याः उपासनादिवसं वसन्तपञ्चमीम् अपि कथयन्ति तथापि लक्ष्म्याः अपि श्रीः इति नामकारणात् लक्ष्मी पञ्चमी अपि श्रीपञ्चमी इति अभिधीयते।

**लक्ष्मीपञ्चमीव्रतस्य पूजाविधिः -**

लक्ष्मीपञ्चम्याः व्रतं विशेषविधिना समायोज्यते। मान्यता अस्ति यत् चैत्रमासस्यशुक्लपक्षस्य चतुर्थीतिथौ स्नानादि अनन्तरं शुभ्रस्वच्छवस्त्राणि धारयेयुः। तत्पश्चात् रात्रौ भोजनरूपेण दधि अथवा अन्नं स्वीकुर्युः। तत्पश्चात्



श्रीपञ्चम्यां दिने प्रातः काले उत्थाय स्नानं कुर्युः ततः स्वर्णताम्ररजतेन वा भगवत्याः लक्ष्म्याः कमलपुष्पेण साकं पूजा विधेया, पूजासामाग्र्याम् अन्नं, हरिद्रा गुढआर्दकमित्यादि मात्रे समर्पणीयम्। तथा च स्वीयसामर्थ्यानुसारेण कमलपुष्प घृत-बिल्वखण्डेन हवनीयम्। यदि प्रतिमासं लक्ष्म्याः व्रतं क्रियते चेत् विधि अनुसारं व्रतस्य उद्यापनम् अपि कुर्युः।

एवं मन्यते यत् दीपावल्याः पश्चात् चैत्रशुक्लपञ्चम्यां भगवत्याः लक्ष्म्याः समाराधनेन व्रतिनः तस्य कुटुम्बस्य उपरि लक्ष्म्याः कृपा सदैव भवति। यः कोऽपि विधिविधानेन भगवत्याः पूजाम् अर्चनां च विधाय उपवासं करोति पौराणिक मान्यतानुसारं सः लक्ष्म्याः लोके स्थानं प्राप्नोति। याः स्त्रियः एतत् व्रतं कुर्वन्ति ताः सौभाग्यवत्यः भवन्ति। तासां सन्तानमपि रूपगुणधनेभ्यः संपन्नाः समृद्धाः च भवन्ति। सा एव चैत्रशुक्लपञ्चमीतिथिः सप्तकल्पादितिथिषु एका इति मन्यते।

येन कारणेन इदं दिनम् अत्यन्तसौभाग्यतमं भवति। चैत्रमासस्य शुक्लपक्षात् एव हैन्दवानां नववर्षस्य आरम्भः जायते। एवं नूतनवर्षस्य आरम्भे एव भगवत्याः लक्ष्म्याः समर्चनया आवर्षं लक्ष्म्याः कृपा भवति।

व्रतिनः तस्मिन् दिने विविधस्तोत्रान् पठेयुः यथा कनकधारास्तोत्रम्, लक्ष्मीस्तोत्रम्, श्रीसूक्तमित्यादि। पूजासमये लक्ष्म्याः मूर्तिः पञ्चामृतेन अभिषिक्ताः स्यात्। चन्दनकदलीपत्रविविधपुष्पान्नदूर्वरक्तसूत्रं, नारिकेलान् समर्पयेयुः मात्रे। पूजासमनन्तरं ब्राह्मणान् भोजयेयुः दक्षिणां च दद्युः। अनेन व्रतविधानेन व्रती सुखसमृद्धिं प्राप्नोति।




**STATEMENT ABOUT OWNERSHIP AND OTHER PARTICULARS ABOUT**

**SAPTHAGIRI**

**(MONTHLY)**

**FORM IV**

*See Rule 8*

| | | |
|---|---|---|
| 1. | Place of Publication | : TIRUPATI |
| 2. | Periodicity of its Publication | : Monthly |
| 3. | Honorary Editor | : Sri Anil Kumar Singhal, I.A.S., Executive Officer, TTD |
| 4. | Printer's Name | : Sri R.V.Vijay Kumar, B.A. B.Ed., |
| | Whether citizen of India | : Yes |
| | Address | : Dy. E.O., (Publications and Press) T.T.D. Tirupati. |
| 5. | Editor & Publisher's Name | : Dr. K.Radha Ramana, M.A. M.Phil. Ph.D., |
| | Whether citizen of India | : Yes |
| | Address | : Chief Editor, . Sapthagiri T.T.D. Journal, Tirupati |
| 6. | Name and address of individuals who own the Newspaper and partners or shareholders holding more than one percent of the Total Capital | Board of Trustees represented by the Executive Officer on behalf of T.T.D., Tirupati |

*I, K.Radha Ramana hereby declare that the particulars given above are true to the best of my knowledge and belief.*

TIRUPATI
Date : 29-2-2020

**(Sd.) Dr.K.RADHA RAMANA**

*Signature of the Publisher*



## आन्ध्रपदकवितापितामहः

# ताल्लपाक अन्नमाचार्यः

- डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८

कलियुगप्रत्यक्षदेवस्य अखिलाण्डकोटि ब्रह्माण्डनायकस्य सप्ताचलधीशस्य श्रीनिवासस्य परमभक्तः ताल्लपाक अन्नमाचार्यः। अन्नमाचार्यः क्रीस्तोः परं पञ्चदशशतब्द्यां भगवतः श्रीवेङ्कटेश्वरस्य नन्दकनाम्नः खणङ्गस्य अंशतया जनिम् अलभत। अन्नमाचार्यस्य जननीजनकौ लक्कमाम्ब नारायणसूरी स्तः। अन्नमाचार्यस्य जननं सर्वधारिवर्षे वैशाखशुक्लपक्षे चतुर्दश्यां बुधवासरे (९-५-१४०८) अभवत्। नन्दवरीकब्राह्मणः वर्तते अन्नमाचार्यस्तावत्। आन्ध्रप्रदेशराज्ये कडपजनपदे विद्यमानः ताल्लपाकग्रामः अन्नमाचार्यस्य जन्मभूमिः। अन्नामाचार्येण अध्यात्मश्रृङ्गारविषयकाः ३२,००० सङ्कीर्तनाः प्रणीताः। परं तासु सङ्कीर्तनासु अद्य यावत् त्रयोदशसहस्र (२३०००) सङ्कीर्तनाः एव प्राप्यन्ते। अन्नमाचर्यस्य सङ्कीर्तनाः न केवलं आन्ध्रभाषायां संस्कृतभाषायाम् अपि वर्तन्ते। साहित्येतिहासे वाग्गेयकाररूपेण अन्नमाचार्यः सुप्रसिद्धः वर्तते। आन्ध्रपदकवितापितामहः इति उपाधिभाक् वर्तते अन्नमाचार्यः। आन्ध्रसाहित्ये अन्नमाचार्यस्य श्रीवेङ्कटेश्वरशतकम् पथमशतकत्वेन भजते। अन्नमाचार्यः संस्कृत भाषायां वेङ्कटाचलमाहत्स्यम् इति क्षेत्रमाहत्स्यग्रन्थम् अलिखत्। परम् इदानीं सः ग्रन्थः नोपलभ्यते। न केवलं ताल्लपाक अन्नमाचार्यः एकः कविः परं तस्य पुत्रः पौत्रश्च कवी स्तः। अन्नमाचार्यस्य भार्या ताल्लपाक तिम्मक्का प्रथमान्ध्रकवयित्री वर्तते। तया लिखितं सुभद्राकल्याणं काव्यं समालोचकैः उत्तमकाव्यमिति निर्धारितम्। ताल्लपाक कवीनां साहित्यम् आन्ध्रसाहित्ये विशेषतया उच्यते।

आन्ध्रपदकवितापितामहः अन्नमाचार्यः संस्कृतभाषायाम् अपि सङ्कीर्तनाः विरचय्य श्रीवेङ्कटेश्वरस्य स्वरार्चनं कृतवान्। अस्मिन् लेखे मया अन्नमाचार्येण लिखिताः सङ्कीर्तनाः स्थालीपुलाकन्यायेन यथाशक्ति परिशील्यन्ते। श्रीनिवासपदार्चने तत्परः अन्नमाचार्यः अनेकासु सङ्कीर्तनासु भगवन्तं पद्मावतीपतिं श्रीवेङ्कटेशं बहुधा कीर्तितवान्। अन्नमाचार्येण लिखितासु सङ्कीर्तनासु सरलसंस्कृतभाषा दृश्यते। अन्नमाचार्यस्य संस्कृतसङ्कीर्तनासु शब्दाः अतिसरलाः भावास्तु गम्भीराः वर्तन्ते। अन्नमाचार्यस्य सङ्कीर्तनाः रामपराः, कृष्णपराः, नरसिंहपराः, नारायणपराः इतराश्च वर्तन्ते।

ब्रुवन्ति बौद्धा बुद्ध इति
स्तुवन्ति भक्तसुलभ इति ।।ब्रुवन्ति।।
गदन्ति किल सांख्यास्त्वां पुरुषं
पदवाक्यज्ञाः पदमिति च
विन्दति त्वा वेदान्तिन -
स्सदा ब्रह्मलसत्पदमिति च ।।ब्रुवन्ति।।
जपन्ति मीमांसकास्त्वां च
विपुलकर्मणो विभव इति
लपन्ति नयानुकलास्सततं

कृपालुकर्ता केवलमिति च ।।ब्रुवन्ति।।
भणन्ति वेङ्कटपते मुनयो
ह्यणिमादिप्रदमतुलमिति
गुणवन्तं निर्गुणं पुनरिति
गुणन्ति सर्वे केवलमिति च ।।ब्रुवन्ति।।

(ताळ्ळपाकपदसाहित्यम्)

यतिप्रास्सनियमपलितायाम् अस्यां सङ्कीर्तनायां तावत् त्रिषु चरणेषु वेङ्कटपतेः उल्लेखः दृश्यते। वस्तुतः यतिप्रासौ आन्ध्रपद्येषु सुप्रसिद्धौ स्तः। संस्कृतपद्येषु यतिः वर्तते। परं संस्कृते यतिर्विच्छेदसंज्ञकः (विरामः) भवति। अन्नमाचार्यः आन्ध्रभाषायाम् इव अमरवायाम् अपि यतिप्रासयोः पालनं कृत्वा श्रावणसुभगत्वं सम्पादितवान्।

अस्माकं लोके अनेकमतावलम्बिनः शास्त्रावलम्बिनश्च भगवन्तं विभिन्नप्रकारेषु कथयन्ति। अतः एव सर्वदा अस्माकं ज्येष्ठैः उच्यते एका सूक्तिः ''एकं सद्विप्राः बहुधा वदिन्त'' इति। एतादशीं भावनाम् एव अन्नमाचार्यः अस्यां सङ्कीर्तनायाम् अवर्णयत्।

भगवन्तं वेङ्कटेशं के के कथं भावयन्तीति अन्नमाचार्यः एवं प्रकारेण वदति, भगवन्तं बौद्धाः बुद्धः इति, भक्तास्तावत् सुलभः इति, सांख्याः पुरुषः इति, अध्यात्मवादिनः वेदन्तिनः



ब्रह्मा इति, मीमांसकाः कर्म इति, नैयायिकाः कर्ता इति। मुनयः अणिमासिद्धिप्रदः वेङ्कटपतिः इति, केचन भक्ताः गुणवान् इति, अन्ये केचन निर्गुणवान् इति सर्वे मोक्षप्रदायकः इति स्तुवन्ति।

एतादशी भावना एव हनुमन्नाटके एवं सुशोभते।

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बोद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं नो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः।।

(हनुमन्नाटकम् १.३)

ब्रुवन्ति बौध्दाः ........ इत्यनया सङ्कीर्तनया अन्नमाचार्यः तस्मिन्नेव काले सामाजिकव्याख्यानं कृतवान् इति वक्तुं शक्यते। समसमाजचिन्तकस्य अन्नमाचार्यस्य भावाः अस्माभिः अनुसरणीयाः वर्तन्ते।

नमाम्यहं मानवसिंहं प्रमदाङ्कमहोबलनरसिंहं....
श्री हरि नित्यशेषगिरीश नमो नारायणाय...
तथा कुरुष्वमुदामाद्येव... कन्दर्पजनक गरुडगमन...

इत्यादि अनेकाः सङ्कीर्तनाः सरलसंस्कृतभाषायां मधुररमणीयसुचारुशैल्या आन्ध्रपदकवितापितामहेन अन्नमाचार्येण विरचिताः वर्तन्ते। अन्नमाचार्यः दुन्दुबि वर्षे इत्युक्तौ क्रि.प.२५०३.तमे वर्षे कैवल्यं प्राप्तवान्। कांस्यफलेकेषु विद्यमानाः अन्नमाचार्यस्य अनेकाः सङ्कीर्तनाः परिष्कृत्य लोकार्पणं कृतवन्तः महनीयाः प्रातः स्मरणीयाः अनेके वर्तन्ते। तेषु राळ्ळपल्लि अनन्तकृष्णशर्मा, वेटूरि प्रभाकरशास्त्री, गौरिपेद्दि रामसुब्बशर्मा प्रमुखाः वर्तन्ते।

तिरुमलतिरुपति देवस्थानानाम् पक्षतः द्रविडागमसार्वभौमस्य अन्नमाचार्यस्य जयन्ति-कार्यक्रमाः, एवमेव वर्धन्ति कार्यक्रमाः आयोज्यन्ते। अन्नामाचार्याणाम् नाम्ना संस्थापितायां परियोजनायाम् अनेके गायकाः कलाकाराः स्वजीविकां प्राप्नुवन्ति।

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति तेषां यशः काये जरामरणजं भयम्।।

इति श्लोकः अन्नमाचार्ये सम्यक् अन्वेति।

वेङ्कटेशपरब्रह्मरसतुन्दिलमानसम्।
अध्यात्मविद्यामर्मज्ञम् अन्नमार्यं नमाम्यहम्।।

अनुष्टुप् छन्दः।



Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and
Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.

## तिरुमलतिरुपतिदेवस्थानम्

# ओण्टिमिट्ट
# श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः

**०२.०४.२०२० तः १०.०४.२०२० पर्यन्तम्**



**०२-०४-२०२० बृहस्पतिवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - शेषवाहनम्

**०३-०४-२०२० भृगुवासरः**
प्रातः - वेणुगानालङ्कारः
रात्रौ - हंसवाहनम्

**०४-०४-२०२० स्थिरवासरः**
प्रातः
वटपत्रशायिनः अलङ्कारः
रात्रौ - सिंहवाहनम्

**०५-०४-२०२० भानुवासरः**
प्रातः
नवनीतकृष्ण अलङ्कारः
रात्रौ - हनुमत्सेवा

**०६-०४-२०२० इन्दुवासरः**
प्रातः - मोहिनी सेवा
रात्रौ - गरुडसेवा

**०७-०४-२०२० भौम्यवासरः**
प्रातः - शिवधनुर्बाणालङ्कारः
रात्रौ - आह्वानम्, कल्याणोत्सवः
गजवाहनम्

**०८-०४-२०२० सौम्यवासरः**
प्रातः - रथोत्सवः

**०९-०४-२०२० बृहस्पतिवासरः**
प्रातः - काळीयमर्दनालङ्कारः
रात्रौ - अश्ववाहनम्

**१०-०४-२०२० भृगुवासरः**
प्रातः - चक्रतीर्थम्
रात्रौ - ध्वजावरोहणम्



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY
Published by Tirumala Tirupati Devasthanams Printing on 25-02-2020.

तिरुपति

श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः

२३-०३-२०२० तः ३१-०३-२०२० पर्यन्तम्